बोधपञ्चदशिकैर्दीक्षितानामुपदिष्टानां पुरुषधौरेयाणां सर्व-
मेव लौकिकं वैदिकं च समस्तमपि कर्मेश्वरार्पणमीश्वरे स-
र्वाधारभूते सर्वनियन्तरि ब्रह्मणि अर्पणं प्रदानमेव भवति इति
प्रसिद्धमेतच्छ्रुतौ स्मृतौ च 'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति
श्रोता नान्योऽतोऽस्ति विज्ञाता' इत्यादिश्रुतेः, 'ब्रह्मार्पणं ब्रह्म हवि-
रि'त्यादिस्मृतेश्च । अतोऽयं प्रत्यक्षो बोधसारस्तु बोधसारनाम-
को ग्रन्थस्तुपदेनास्य ग्रन्थस्यान्यसमस्तग्रन्थेभ्यो विलक्षणत्वं
सूचितं, परमेशितुः परमः कार्यकारणातीत ईशितेश्वरो ब्रह्मा-
भिन्नप्रत्यगात्मा तस्य बोधसाररूपत्वसामान्यादुभयोरपीत्यर्थः,
अस्य ज्ञानिनां प्रत्यक्षत्वेनानुभूयमानस्यात्मनः स्वात्मैव स्वस्व-
रूपमेवास्ति अतः समर्पकस्य समर्प्यस्य च समर्पणस्यापि अ-
सम्भवात्समर्पणं न सम्भवतीत्येवं निश्चय एवात्र समर्पणं ना-
न्यदिति भावः ॥ ३ ॥

नरहरिपदसेवालब्धविज्ञानसारो
बुधजनहितकृत्यै बोधसारार्थदीपम् ।
शुभदिनकरसाह्वो मुक्तये सज्जनानाम्
अकृत जनशरण्यस्तेन तुष्यात्परात्मा ॥ १ ॥

सन्तः कृपालवस्तज्ज्ञाः क्षमन्तु मम साहसम् ।
स्वाधिकारमदृष्ट्वैव यदुक्तं क्षमिणो हि ते ॥ २ ॥

शाके गजाग्निमुनिभूमिमिते तु वर्षे ।
रामाद्रिनागशशिविक्रमिते तपस्ये ।
पक्षे सिते सुतशशाङ्कतिथौ भवारे
व्याख्या समाप्तिमगमद्बुधकमन्या ॥ ३ ॥

बोधसारार्थदीपाख्या व्याख्येयं भावबोधिनी ।
दिवाकरेण रचिता नरसिंहप्रसादतः ॥ ४ ॥

इति श्रीनरहरिशिष्यदिवाकरविरचिता बोधसारार्थदीपाख्या
टीका समाप्ता ॥ ग्रन्थसङ्ख्या १६००० ॥

ALLAH